Digitized by Madhuban Trust, Delhi

प्राच्यभारतीग्रन्थमाला—१४

Prāchyabhāratī Series—14

# ऐतरेयब्राह्मणम्

सम्पादकः, अनुवादकः

**डॉ॰ सुधाकर मालवीयः**

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

प्राच्यभारतीग्रन्थमाला—१५

ऋग्वेदीयम्

# ऐतरेयब्राह्मणम्

श्रीमत्सायणाचार्यकृत—'वेदार्थप्रकाश'—नामभाष्येण सहितम्
'सरला'—ख्यया हिन्दीव्याख्यया चोपेतम्
टिप्पण्यादिसमन्वितम्

*सम्पादकोनुवादकश्च*

**डॉ॰ सुधाकर मालवीयः**

एम॰ ए॰, पीएच॰ डी॰, साहित्याचार्यः

(संस्कृत-पालि विभागः काशी हिन्दू विश्वविद्यालयः)

*प्रास्ताविकम्*

**पं॰ अ॰ मु॰ रामनाथ दीक्षितः**

भू॰ पू॰ वेदविभागाध्यक्षः

(प्राच्य विद्या धर्मविज्ञान संकायः काशी हिन्दू विश्वविद्यालयः)

**प्रथमो भागः**

**[प्रथमतः-चतुर्थपञ्चिकान्तः]**

प्रकाशकः

**तारा बुक एजेन्सी**

**वाराणसी**

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

*Prāchyabhāratī Series - 14*

# THE AITAREYA BRĀHMAṆA OF THE ṚGVEDA

With the Commentary
VEDĀRTHA-PRAKĀŚA OF SĀYAṆĀCĀRYA
AND 'SARALA' HINDI TRANSLATION

*Edited & Translated by*
**Dr. SUDHAKAR MALAVIYA**
M.A., Ph.D., Sāhityācārya
DEPARTMENT OF SANSKRIT & PALI
BANARAS HINDU UNIVERSITY

*Foreword by*
**Pt. RAM NATH DIXIT**
EX. PROF. & HEAD OF THE DEPT. OF VEDA
U. G. C. PROFESSOR
FACULTY OF ORIENTAL LEARNING & THEOLOGY
BANARAS HINDU UNIVERSITY

**VOL. I**

**TARA BOOK AGENCY**
VARANASI

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

'चरन् वै मधु विन्दति चरन् स्वादुमुदुम्बरम्।
सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चरँश्चरैवेति ॥

—ऐ० ब्रा० ३३.३

[ सक्रिय व्यक्ति को मधु की प्राप्ति हो जाती है और सदा गतिशील व्यक्ति स्वादिष्ट उदुम्बर आदि फल प्राप्त कर लेता है। अविश्रान्त रूप से अहर्निश गतिमान् रहने के कारण ही सूर्य विश्ववन्द्य है। अतः जीवन में दृढ़ निश्चय के साथ आगे चलते चलो, चलते चलो ]

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

यस्या नमस्यपदपद्मपरागपूतं
चेतो दुरूहविषयग्रहणक्षमं मे ।
तस्या अशेषवरकल्पतरुप्रसून-
सङ्काशहस्तयुगले कृतिरर्पितेयम् ॥

—सुधाकर मालवीयः

❀ ❀ ❀

॥ श्रीः ॥

श्रीमद्गुरुवर्यायाः मिश्रकुलालङ्कारमणिमालायाः
डा० पद्मामिश्रमहोदयायाः
करकमले सादरं
समर्पितम्

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# प्रास्ताविकम्

संसारे सर्वेषां जीवानामेक एवाभिप्रायः नित्यं निरतिशयं च सुखं मे भूयात् मृत्युर्मे मा भवत्विति। यदि नित्यं निरतिशयं सुखं नाम पदार्थः कश्चन न भवेत्, तदा न कोऽप्येवं मन्येत। न च शशशृङ्गं खपुष्पं वा पश्येयमिति कश्चनाभिप्रैति। तादृशं च सुखं ब्रह्मैवेति शास्त्राणि ब्रुवते। जीवः तदवाप्त्यै शास्त्रसिद्धं पन्थानमुपेक्ष्य स्वमनीषया कल्पितं वर्त्मानुगच्छन् कंचित्कालं सुखी भूत्वा निर्विण्णः मार्गान्तरमवलम्बमानो वानर इव शाखायाः शाखान्तरं धावमानो न नित्यसिद्धं तादृशं सुखमनुभुङ्क्ते। तादृशसुखावाप्त्यै प्रथमं सोपानं भवति यज्ञः—

'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।' —इति स्मृतेः।[1]

यज्ञाः इष्टिपशुसोमरूपा अल्पकालसाध्याः। महायज्ञाः अहीन-सत्राणि। यद्यपि तेषां फलान्तरसाधनत्वेन निर्देशः, तथापि उभयार्थता शास्त्रसिद्धा। 'तमेतं ब्राह्मणा विविदिषन्ति यज्ञेन, दानेन तपसानाशकेने'ति बृहदारण्यकश्रुतिस्सर्वेषां यज्ञानां विविदिषासाधनत्वं वेदनसाधनत्वं वोद्घोषयन्ति। ते च यज्ञा मन्त्रसाध्याः। तथाहि—

द्रव्यं देवतेति यज्ञस्य रूपे। द्रव्याणां मन्त्रैः संस्कारः। देवतायाः स्वरूपं च मन्त्रवर्णैश्च इति। प्रथममुपनीतो बटुः संहिताध्ययनं कृत्वा ब्राह्मणाध्ययनं कुर्वन्नङ्गेषु निरुक्तादिषु व्युत्पन्नो वेदार्थं निश्चित्य मीमांसया द्वितीयमाश्रमं स्वीकृत्य कर्माणि भार्यया सहानुतिष्ठति। तत्र कर्मणामलौकिकानां स्वरूपं ब्राह्मणभागो व्यक्तं करोति स्म। अत एव शाखोपशाखाशोभितोऽनादिनिधनो वेदवृक्षः समेषामास्तिकानामुपजीवनीयो भवति। धनिनोऽमुं वेदतरुं यथाशक्ति रक्षन्तस्तत्राधिकृतानां द्विजानां धनवस्त्राशनप्रदानैर्धनानां सदुपयोगमकुर्वन्। सप्तद्वीपायां वसुमत्यामासृष्टेरयं वेदः समघुष्यत। कालेन स्वार्थसम्पादने बद्धादरा धनिनो राजानश्च वेदरक्षां नो चक्रुर्भारतभुवं विहायान्यत्र स्थिताः। राक्षसा ब्रह्मद्विषोऽप्येतं वेदमधिजगुः। सुन्दरकाण्डे वाल्मीकिरुपश्लोकयति स्म—

"शुश्राव ब्रह्मघोषांश्च विरात्रे ब्रह्मरक्षसाम्।" इति।

राक्षसेश्वराः हिरण्यकशिपुप्रभृतयः वेदमन्त्रानुच्चार्य परमेश्वरं पूजयन्तः स्वसमीहितं फलं लेभिरे। "स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः, तद्धि तपस्तद्धि तपः"—इति श्रुतिः तपःशब्दार्थमाविष्कुर्वन्ती स्वाध्यायस्यादरेण माहात्म्यं प्रतिपादयति।

साम्प्रतमेषा श्रुतिः गुरुपरम्परया समायाता भारतभुवि परिमितान् विदुष आश्रित्य कथंचिज्जीवति। वैदेशिकाः शास्तारोऽपि कर्मानुष्ठातृभ्यो द्विजेभ्य उपहारमुपायनीचक्रुर्ग्रामादीन्।

वेदं मन्त्रब्राह्मणात्मकं समग्रमधिकृता उपनीताः गुरुमुखादधीत्योच्चारयन्तः समग्रं भूमण्डलं पवित्रीकुर्वन्ति। तत्र मन्त्रः त्रिविधः—१. पादबद्धः, २. गद्यात्मकः,

---

१. मनु० २.२८। 'महायज्ञैः पञ्चभिर्ब्रह्मयज्ञादिभिः। यज्ञैर्ज्योतिष्टोमादिभिः। ब्राह्मी ब्रह्मप्राप्तियोग्येयं तनुः तन्ववच्छिन्न आत्मा क्रियते'—इति तत्र कुल्लूकभट्टः।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३. गानरूपः, इति ॥ तेषामेव **'ऋग्यजुस्सामानीति'** समाख्या । तत्र मध्ये स्थितं यजुःपद-मुभयोर्वेदयोरुपजीवनं भवति । तथाहि—यजुर्भिर्निष्पन्ने कर्मणि तौ याज्यापुरोनुवाक्यादि स्तोत्रं च सम्पादयतः । यजुरभावे न तयोर्वेदयोरुपयोगः । एवं चेद् यजुषः सर्वत्र प्रथमतः कीर्तनं न कृतमिति कस्य चन मतिरुदियात् तत्रेदं प्रतिवचनम्—यजुर्वेदे सामवेदे च बहवः पादबद्धा मन्त्राः समाम्नाताः । ततश्चर्ग्वेदस्य प्रथमतः सङ्कीर्तनं सर्वत्र न दोषाय ऋग्वेदस्य प्रथमनिर्देशे निदानमिदम्—अस्यैव वेदस्याष्टौ विकृतयः—१. जटा, २. माला, ३. शिखा, ४. रेखा, ५. ध्वजः, ६. दण्डः, ७. रथः, ८. घनः—इति विराजन्ते । एतासां विकृतीनां लक्षणानि च प्रतिपादितानि महर्षिभिः । तान्यनुसृत्य यजुर्वेदेऽपि घनान्तः पाठः प्रचलति साम्प्रतम् । यजुर्वेदे क्रमान्तपाठः, सामवेदे पदान्तपाठः शिष्ट-सम्मतः ।[1] कृष्णयजुर्वेदस्यायं वैशेषिको गुणो यद् ब्राह्मणानां संहितास्थानामपि पदपाठा-दयो भवन्ति; ब्राह्मणग्रन्थस्थानां मन्त्राणां पदपाठोऽपि नास्तीति ।

सोऽयं ऋग्वेदो नानाशाखाभिन्नः साम्प्रतं शाखाद्वयेन विराजते । स च वेदः दशमण्डला-त्मना विभक्तः सवालखिल्यः । पुनः मण्डलानि च सूक्तात्मना विभक्तानि । अध्यायरूपेणापि विभक्तः । अष्टौ अध्याया एकमष्टकम् । एवम् अष्टौ 'अष्टकानि' । अध्यायानां वर्गात्मना विभागः । सर्वा भेदकृतिरध्ययनसौकर्याय । प्रयोगे पुनः सूक्तात्मनैव विनियोगः । तेषां मन्त्राणामर्थं विनियोगं च नानाविधहेतुभिः प्रतिपादयति ब्राह्मणम् । तानीमानि ब्राह्मणानि ऋषिप्रोक्तानीति केचन । ततो वेदशब्देन 'ब्राह्मणं' नाभिधीयते—इति तेषां मतम् । अपरे तत्र प्रत्यवतिष्ठन्ते, तथाहि—ब्राह्मणग्रन्थे तत्र तत्र नित्यनैमित्तिककाम्य-भेदेन कर्तव्यानि त्रीणि कर्माणि प्रतिपाद्यन्ते । तत्र—

**'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति'**—श्रूयते ।

यावद् ब्राह्मणग्रन्थस्यापौरुषेयत्वं न स्वीक्रियते, तावदेतस्य वाक्यस्य प्रामाण्यं न सिध्येत् । केन ऋषिणा दर्शपूर्णमासावनुष्ठाय स्वर्गं गत्वा पुनरागत्य मानुषं लोकमेतद् वाक्यमारचितम् । स्वर्गलोकगमनमनेन नश्वरेण पार्थिवेन शरीरेण नैव सम्भवति । मृत्वा सूक्ष्मशरीरेण तत्र गत्वा तैजसं शरीरं प्रविश्य तत्रत्यसुखान्युपभुङ्क्ते जीव इति शास्त्र-मर्यादा । अस्यां परिस्थितौ मृत्वा स्वर्गलोके यथाकालं कर्मफलमनुभूय यदा प्रत्यावर्तते जीवः तदा स्वानुभूतं स्वर्गं तत्साधनं चोपवर्णयितुं समर्थः । यथा विदेशं गत्वा प्रत्यावृत्तः वैदेशिकान् गुणान् दोषांश्चोपवर्णयन् तत्र गमनसाधनं चोपवर्णयति तथा नास्त्यत्र । यतो हि निर्जीवं शरीरं भस्मसात्कुर्वन्ति अवटे वा स्थापयन्ति । ततश्च शरीराभावात् तदेव-

---

१. ऋग्वेदस्तु घनान्तः स्यात् यजुर्वेदो जटान्तकः ।
सामवेदः पदान्तः स्यात् संहितान्तात् त्वथर्वणः ॥
Yohipraptilaksana, a Ms. work in the Madras Library No. 948.

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



शरीरं प्रवेष्टुं नार्हति स्वर्गं भुक्तवान् । अपि च जीवनदशायां बहूनि कर्माणि कृतानि । तत्रैतन्न ज्ञायते यागस्यैवैतत्स्वर्गः फलं नान्येषामिति । तत्र कश्चन ब्रूयात्—ऋषयोऽतीन्द्रिय-द्रष्टारः । ते ज्ञानेन चक्षुषा विलोक्य वाक्यानीमानि प्रोक्तवन्त इति तं प्रतिब्रूयात् इन्द्रियाणां स्वविषयग्रहणे तात्पर्यमतीन्द्रियशब्दस्य । न त्वयोग्यपदार्थग्रहणे सामर्थ्यम् । तच्चोक्तं भट्टपादैः—

**"न रूपे शब्दवृत्तिता ।** इति ।

अपि चान्योऽन्याश्रयदोषोऽप्यपरिहार्यो भवति कर्मभिर्ऋषित्वम् ऋषिभिः कर्मणामुपन्यास इति । ऋषित्वं धर्मानुष्ठानेन सिध्यति । धर्मज्ञानं च वेदं विना नान्येन मार्गेण । न हि मन्त्रैः कर्म विधीयते । यदि विधीयते तदा तादृशो मन्त्रः न दृष्टिपथं गच्छति । मन्त्रत्वं च जह्यात् । **'यजेत स्वर्गकामः'** इति वाक्यं भावनां साध्यं साधनं च निरूपयत् कथमप्रमाणपदवीमियात् । यदेतत् काठकम्, ऐतरेयकं, कौथुममिति श्रूयते ब्राह्मणानां विशेषणम्, तच्च समानं मन्त्राणाम् । तदा हि ब्राह्मणमिव मन्त्रा अपि ऋषिप्रोक्ता भवेयुः । नैतत् स्वीकुर्वन्ति ब्राह्मणानामार्षत्वं मन्यमानाः । संस्कारवाक्यानि बहूनि कदर्थितानि च भवेयुः । अपौरुषेयत्वे नेमे दोषाः समापतेयुः । अपि च ब्राह्मणग्रन्थानां संहिताभ्यः पश्चात्कालीनत्वं यदि वादिप्रयुक्तं क्षणकालं स्वीकुर्मस्तदोपनीतैरध्यैर्वा वेदः अध्येतव्य—इति न ज्ञायते । तदा संहिताध्ययनाभावात् पतिता एव भवेयुः । ब्राह्मणग्रन्थस्यापौरुषेयत्वे यथा यागो धर्मः यतो यजेतेति विधीयते तद्वत्—**'स्वाध्यायोऽध्येतव्यः'**[1] इति वाक्योक्तमध्ययनविधिवाक्यमपि स्वाध्यायाध्ययनं धर्मः । स चानुष्ठेय इति संहिताध्ययने प्रवृत्तिमुद्भावयेत् । अत्र बहु वक्तव्यम् अवशिष्यते । प्राचीनैरपि ब्राह्मणानामपौरुषेयत्वं सहेतुकं स्थापितं पूर्वपक्षिणां हेतवश्चाभासीकृताः ।

तत्र ऋग्वेदस्येदं ब्राह्मणम् । होता, मैत्रावरुणः, ब्राह्मणाच्छंसी, नेष्टा, पोता, अच्छावाकः, आग्नीध्रः इतीमे सप्त होत्रका ऋत्विजः । एते सोमयागे त्रिषु सवनेषु याज्यामृग्भिर्मन्त्रैः सम्पादयन्ति । ततश्च **'होत्रकाः'**-इति व्यवह्रियन्ते । होता, मैत्रावरुणः ब्राह्मणाच्छंसी, अच्छावाकः—आज्यप्रउगादिशस्त्रं शंसन्ति; ततश्चैषां शस्त्रिणो होत्रका इत्यपि श्रौतसूत्रेषु व्यवहारः । प्राधान्येन सोमयागीयहौत्रं प्रतिपादयति ब्राह्मणमैतरेयम् । तथाहि—इष्टिपशुष्वपि हौत्रं भवति । तच्च हौत्रं तैत्तिरीयकब्राह्मणग्रन्थे क्रमेण निरूपितम् । तदुपजीव्य हौत्रमारचितवन्तः श्रौतसूत्रकर्तारः । ऋग्वेदे याज्यापुरोऽनुवाक्याः, सामिधेन्यः, एव पठिताः । आवाहनाज्यभागयाज्या-प्रयाजानुयाजयाज्या पाशुकाः प्रैषाश्च कृष्णयजुर्वेद एव वर्तन्ते न ऋग्वेदसंहितायाम् । परं श्रौतसूत्रे सर्वेऽन्यशाखापठिताः मन्त्रा उपसंहृत्य हौत्रविधिं प्रतिपादयत्याश्वलायनः सौमिकं हौत्रं तु न वेदान्तरेषु विद्यते । तत्र सोमयागे शस्त्राणि याज्यापुरोनुवाक्यांश्चापेक्ष्यन्ते । तदेतत् प्रतिपादयति शास्त्रं प्रधानतया । अन्याश्चापेक्षिताः क्रिया सप्रसङ्गं निरूपिताः : आज्य-

1. तै० आ० २.१५.७; शत ब्रा० ११.५.६.३ ।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



शस्त्रम्, प्रउगशस्त्रम्, मरुत्वतीयशस्त्रम्, निष्केवल्यशस्त्रम्, वैश्वदेवशस्त्रम्, आग्निमारुतशास्त्रम्, षोडशीशस्त्रम्, पर्यायशस्त्रम्, आश्विनशस्त्रमिति होत्रा पठ्यन्ते। प्रउगशस्त्रम्, निष्केवल्यशस्त्रम्, आग्निमारुतशस्त्रम्, पर्यायशस्त्रम् अनु मैत्रावरुणादयस्त्रयः शस्त्रिणः स्वं स्वं शस्त्रं पठन्ति । यः शंसिता स एव तत्र वषट्कर्ता। शंसनार्थं प्रवृत्तः वषट्कारपर्यन्तं वाचं यच्छेत् । प्रातरनुवाकः अग्निमन्थनीया अग्नीषोमप्रयणीयाः सोमप्रवाहणः, अपोनप्त्रीया इति होतैन्वाह । तस्मादस्य वेदस्य 'होतृवेदः' इति प्रसिद्धिः । त इमे विषया अत्र ब्राह्मणे विवेचिताः । तत्र याज्यापुरोऽनुवाक्ये विहायान्येषां त्रिःप्रथमां त्रिरुत्तमां चेति विधिवाक्यमनुसृत्य प्रथमाया ऋचो वारत्रयं उत्तमायाः वारत्रयं पाठो ज्ञेयः । उत्तमायाः परिधानीयेति समाख्या । 'प्रतिपद्' इति प्रथमाया ऋचः । शस्त्रेषु त एव तृचा भवेयुः । तत्र तृच आद्यस्यैवावृत्तिः । प्रतिपद्, अनुचरा, स्तोत्रिया अनुरूपा एताः तृचा एव सर्वत्र । प्रगाथेषु तृच क्लृप्तिर्ब्राह्मणे निरूपितम्—द्वयोः ऋचोः '**प्रगाथ**' इति समाख्या । तत्र पूर्वा बृहती, द्वितीया सतोबृहती भवेत् । निष्केवल्यशस्त्रे पूर्वा बृहती, उत्तरे ककुभौ । तन्निर्मित्य प्रथमां समग्रामुक्त्वा तस्या एव चतुर्थपादं पुनरादय सतोबृहत्याः पूर्वार्धं पठेत् । तथा पूर्वार्धस्य द्वितीयं पादं पुनः पठित्वा सतोबृहत्याः शिष्टमर्धर्चं पठेत् । तदा ककुबुत्तरा बृहती; यदा प्रथमां पठित्वा तस्या अन्तिमं पुनरादाय द्विवारं पठित्वा सतोबृहत्याः पूर्वार्धं पठेत्, तथा पूर्वार्धस्य द्वितीयं पदं वारद्वयं पठित्वा शिष्टमर्धर्चं पठेत्, तदा 'बार्हतः-प्रगाथ' इति ।

इमे हि विषयाः दुर्ज्ञेयाः । पण्डितकुलोत्पन्नेन सम्पादकमहोदयेन सायणभाष्यसहितं ब्राह्मणवाक्यं सर्वजनबोधाय राष्ट्रभाषायामनूद्य वेदस्य सेवा महती कृता । मालवीयकुलोत्पन्नाः सर्वे प्रायः लोकोपकारकरणे बद्धादरा इति कुलमाहात्म्यं संरक्षितं सम्पादकेन । अस्य पिता स्व० पं० रामकुबेरमालवीयः, काशीहिन्दूविश्वविद्यालयीयप्राच्यविद्याधर्मविज्ञानसंकायस्य साहित्यविभागाध्यक्षः, वाराणसेय संस्कृतविश्वविद्यालयस्य साहित्यविभागाध्यक्षो भूत्वा बहूनन्तेवासिनः मधुरया वाण्या साहित्यशास्त्रम् अपाठयत् आशुकविरचासीत् । स्वतनयमपि प्रेम्णालङ्कारशास्त्रमध्याप्य ग्रन्थशोधनानुवादनकलायां निपुणमकार्षीत् । पितुरानृण्यं सम्पादनेच्छयैव तदुदितं वर्त्मानुसरन्ननुसन्धातॄणां ब्राह्मणवाक्यार्थजिज्ञासूनामुपकाराय भाष्यगतप्रमाणवाक्यानामाकरं टिप्पण्यामुल्लिख्य प्रशंसाभाजनं भवति । तस्य महाभागस्य दीर्घायुष्ट्वं परमेश्वरो वेदैकवेद्यःप्रदायावशिष्टभागेन सह लुप्तानां ग्रन्थानां सम्पादने प्रकाशने च मेधां ददात्विति सर्वेश्वरं प्रार्थये ।

हनुमद्घट्टः
काशी
३.९.१९८०

**अ० मु० रामनाथदीक्षितः**

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# सम्पादकीयम्

अथेदानीं सप्रश्रयं सामोदं च विद्वज्जनसमक्षं प्रस्तूयते श्रीमत्सायणाचार्यविरचित-'वेदार्थप्रकाश' नामभाष्यसहितः **ऐतरेय-ब्राह्मणस्य** प्रथमादिचतुर्थपञ्चिकान्तः प्रथमो भागः। १९०५ ख्रिष्टाब्दे सामश्रमि-श्रीसत्यव्रतशर्ममहोदयेन कलिकातापुर्यातः यद्यप्ययं ग्रन्थः संशोध्य पूर्वं मुद्रापितः, तथापि तद्ग्रन्थस्याधुना दुर्लभत्वात् तत्प्रकाशनस्यावश्यकतां संचिन्त्य संशोधनपूर्वकं तस्य संपादने प्रवृत्तोऽस्मि। यद्यप्ययं ग्रन्थः समग्र एव प्रकाशनीय इत्यासीन्मनीषा मम प्रकाशयितुश्च, तथापि पुस्तकस्यास्यापणेषु दुष्प्राप्यताम् अवलोक्य प्रथमभागस्यैव झटिति प्रकाशनं कृतम्।

तत्र तावत् तत्पाठस्य संशोधनार्थं यानि पुस्तकानि प्रयुक्तानि दृष्टानि वा मया तानि निर्दिश्यन्ते—

**(i) ऐ० ब्रा० मूलपाठ-संशोधनार्थम्—**

(क) हस्तलिखितो ग्रन्थः, सरस्वतीभवनपुस्तकालयस्थः। क्रमसंख्या ४०२, लिपिकालः १८७३।

(ख) निर्णयसागरयन्त्रालये मुद्रितः पत्राकारमूलमात्रात्मकः ग्रन्थः।

(ग) हागमहोदयेन सम्पादितम् ऐ० ब्राह्मणम्, पुण्याख्यपत्तनतः मुद्रितम्।

(घ) श्रीषड्गुरुशिष्यविरचित-'सुखप्रदा'ख्यवृत्तिसहितम् ऐ० ब्राह्मणम्; तिरु-अनन्तपुरतः प्रकाशितम्।

**(ii) सायणभाष्यपाठ-ऐ० ब्रा० मूलपाठयोः संशोधनार्थम्—**

(ङ) हस्तलिखितो ग्रन्थः, स० भ० पुस्तकालयस्थः। क्रमसंख्या ५९६।

(च) श्रीसत्यव्रतसामश्रमिमहोदयेन सम्पादितम् 'ऐ० ब्राह्मणम्'; 'रायल ऐ० सो०' इति समित्या कलिकातापुर्यां मुद्रितम्।

(छ) पं० काशीनाथशास्त्री आगाशे महोदयेन सम्पादितम् 'ऐ० ब्राह्मणम्' आनन्दा-श्रम-मुद्रणालय-पुण्याख्यपत्तनतः मुद्रितम्।

**(iii) 'जैमिनीयन्यायमालाविस्तरतः' सायणभाष्ये उद्धृतांशस्य संशोधनार्थम्—**

(ज) 'जैमिनीयन्यायमालाविस्तरः'—आनन्दाश्रम-मुद्रणालय-पुण्याख्यपत्तनतः मुद्रितः।

एवम् उपरिनिर्दिष्टानि पुस्तकान्यवलोक्य संशोधितः ग्रन्थोऽयं प्राकाश्यं नीयते। व्यति-रिक्तमेतद्—एतेषु पुस्तकेषु यत्र क्वापि उद्धृतांशेषु त्रुटयोऽवलोकिताः तत्तदाकर-ग्रन्थेभ्यः मूलपाठं संशोध्य ताः सर्वा अपकृता अस्माभिः। आकरग्रन्थानां निर्देशोऽपि मया यथाशक्ति यथास्थानं कृतः। सायणभाष्ये वेदान्तराद् शाखान्तराद् वा यत्र तत्र उद्धृतीनां सायणेन उपादानं कृतम्, तानि तानि स्थलानि समानार्थकानि च ब्राह्मणेतरवाक्यान्यपि तत्र तत्र मया टिप्पण्यामुद्धृतानि। एतद् व्यतिरिक्तं सायणभाष्ये मूले वा ऋग्वेदगतानां वेदान्तराणां वा मन्त्राणां स्थलसङ्केतः तत्र तत्रैव पादटिप्पण्यां कृतः। मन्ये एतद्

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



शोधछात्राणां विद्वद्वराणां वा किमपि उपकाराय संपद्येत। वस्तुतस्तु रीतिरियं विद्वद्-वरेण्येन श्रीसामश्रमिमहोदयेन समादृता, सैवाऽनुसृताऽस्माभिः।

हिन्दी-भाषायाः प्रसारो देशे विदेशेऽप्यस्ति—इति विचिन्त्य छात्राणां च महती-मावश्यकताम् अवलोक्य एतस्य ब्राह्मणस्य हिन्दी-अनुवादोऽपि मया सायणभाष्यमनुसृत्य कृतः। अनुवादस्य परिष्कारे यः श्रमः अस्मद्-गुरुवर्याभिः डा० पद्मामिश्रमहोदयाभिः कृतः तदर्थम् आशीर्वादकामनया साञ्जलि प्रणतिमेव विनिवेदयामि।

सुविदितमेव हि इदम् अस्य ग्रन्थस्य अध्येतॄणां यत्—वैदिकसंस्कृते निबद्धानि गम्भीरब्राह्मणवाक्यान्यतिक्लिष्टानि। एतादृशग्रन्थस्य सम्पादने अनुवादे च मादृशानाम् अल्पमतीनां प्रवृत्तिः—

'मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम्।
प्रांशुलभ्ये फले लोभाद् उद्बाहुरिव वामनः॥

इति न्यायेन साहसमात्रमेव; तथापि यदुपलब्धं मया श्रीगुरुचरणेभ्योऽखिलविद्या-पारंगतेभ्यः पं० क्रान्तानाथशास्त्रितैलङ्गमहोदयेभ्यः तथा च वेदविद्यारताभ्यः प्रोफेसर पद्मामिश्रमहोदयाभ्यः, तदेव चात्र निहितम्।

अत्र शोधनार्थमपेक्षितान् दुर्लभानपि ग्रन्थान् यथासमयमविलम्बेन मह्यं दत्तवतो महोदयान् प्रति कृतज्ञतां द्योतयन् तेषां नामान्यत्र स्मरामि—पूज्या गुरुवर्या डा० पद्मा-मिश्रमहाभागा, काशी हिन्दू विश्वविद्यालयीय संस्कृत-विभागे भूतपूर्वा प्राध्यापिका। पण्डितप्रवराः गुरुकल्पाः डा० विश्वनाथभट्टाचार्यमहोदयाः, संस्कृत-विभागे प्राध्यापकाः। पण्डित श्रीयाज्ञिकमहोदयाः, श्रीविश्वनाथपुस्तकालयाध्यक्षाः। पण्डित श्रीसातकोडिमुखो-पाध्यायमहोदयाः, अधुना हस्तिनापुरे 'लाइब्रेरी-कांग्रेस'—संस्थायां कार्यरताः।

अन्ते, काशीहिन्दूविश्वविद्यालयीय प्राच्यविद्याधर्मविज्ञानसंकाये भूतपूर्वं वेद-विभागाध्यक्षाः, सम्प्रति 'यू० जी० सी० प्रोफेसर'—पदमलङ्कुर्वाणाः गुरुवर्याः पं० श्री अ० मु० रामनाथदीक्षितमहोदयाः अस्य ग्रन्थस्य प्रास्ताविकं विलिख्य मां अनुगृहीतवन्तः। न जाने कथङ्कारम् एतेषां कर्मयोगिनाम् आनृण्यमुपैमि।

रात्रिन्दिवं पाण्डुलिपिकार्ये प्रूफसंशोधने च संलग्नाया मत्भार्याया सौ० सरलायाः साहाय्यं विना एतत् दुष्करं कार्यं मया असाध्यमेव स्यात्।

अपरञ्च काशीस्थतारामुद्रणालयाधिकृतानां दुर्लभ-प्राचीनसंस्कृतग्रन्थरत्नानां प्रका-शने रतानां श्रीरमाशङ्करपण्ड्यामहोदयानामपि आभारो मया अवश्यमेव करणीयम्।

एवं संशोधितेऽप्यस्मिन् ग्रन्थे ये केचन मानुषमात्रसुलभा दोषा भवेयुः, ते विद्वद्भिः सदयं क्षन्तव्या इति बद्धाञ्जलिरहमभ्यर्थयामि—

ग्रन्थोऽयमैतरेयाख्यः भृशं संशोधितो मया।
सद्भिः सारश्च ग्राह्योऽत्र, स्यादसारो हि मत्कृते॥ इति शम्।

विदुषां वशंवदः
सुधाकर मालवीयः

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# सायणभाष्यसहित-ऐतरेय-ब्राह्मण-विषयसूची



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





॥ इति सभाष्य-ऐतरेयब्राह्मणस्य प्रथमभागस्य विषयसूची ॥

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# ऐतरेय ब्राह्मण हिन्दी विषय-सूची

## सोमयाग-निरूपण

### प्रथम पञ्चिका

#### प्रथम अध्याय [१]

#### दीक्षणीय इष्टि



#### द्वितीय अध्याय [२]

#### प्रायणीय इष्टि [=प्रारम्भिक कृत्य]



#### तृतीय अध्याय [३]

#### सोमक्रय और सोमानयन



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## चतुर्थं अध्याय [४]

## प्रवर्ग्य इष्टि



## पञ्चम अध्याय [५]

## अग्नि, सोम का आनयन और आहुतियाँ



# द्वितीय पञ्चिका

# सोमयाग (क्रमागत)

## प्रथम अध्याय [६]

## पशु-याग



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





द्वितीय अध्याय [७]

## पशुयाग और प्रातरनुवाक



तृतीय अध्याय [८]

## अपोनप्त्रीय और अन्य इष्टियाँ



चतुर्थ अध्याय [९]

## विभिन्न-ग्रह



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



### पञ्चम अध्याय [१०]

### आज्यशस्त्र



## तृतीय पञ्चिका

## सोमयाग (क्रमागत)

### प्रथम अध्याय [११]

### प्रउगशस्त्र, वषट्कार और निविद्



### द्वितीय अध्याय [१२]

### मरुत्वतीय और निष्केवल्यशस्त्र



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





तृतीय अध्याय [१३]

## वैश्वदेव और आग्निमारुतशस्त्र



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





———

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# भूमिका

महिदासैतरेयर्षिसंदृष्टं ब्राह्मणं तु यत् ।
'अग्निर्वा' इतिहारभ्य 'स्तृणुते स्तृणुते'ऽन्तकम् ॥ १ ॥
चात्वारिंशाख्यमध्यायाश्चत्वारिंशदिहेति डण् ।[1]
क्रियते भूमिका तस्य ब्राह्मणार्थप्रकाशिका ॥ २ ॥

ईश्वर की विमल वाणी वेद वस्तुतः मन्त्र एवं ब्राह्मणात्मक हैं ।[2] जैमिनि के अनुसार वेद के मन्त्रावशिष्ट अंश 'ब्राह्मण' हैं[3] जो न तो मन्त्र ही हैं और न मन्त्र कहे ही जा सकते हैं ।[4] जैमिनीय सूत्र के भाष्य में शबर ने दो श्लोक उद्धृत किए हैं जिनमें ब्राह्मण ग्रन्थों को दस विशेषताओं से समन्वित कहा गया है ।[5] इस प्रकार सामान्य रूप से इनमें हेतु, निर्वचन, भर्त्सना, प्रशंसा, संशय, विधि, उदाहरण, उपाख्यान, पुराकल्प और पूर्वापर की आलोचना से अर्थ का व्यवधारण[6] करना आदि विषय हैं ।

चारों वेदों के अपने-अपने ब्राह्मण ग्रन्थ हैं । १. ऐतरेय और कौषीतकि (जिसे शाङ्खायन या सांख्यायन भी कहते हैं) ब्राह्मण ऋग्वेद के हैं । २. तैत्तिरीय ब्राह्मण कृष्ण यजुर्वेद का है । शतपथ-ब्राह्मण शुक्ल यजुर्वेद का है । ३. जैमिनीय, ताण्ड्य (पञ्चविंश-षड्विंश), सामविधान, आर्षेय, मन्त्र, देवताध्याय, वंश एवं संहितोपनिषद् ब्राह्मण सामवेद

---

१. 'त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण्'—इति पा० सू० ५.१.६२ ।
२. मन्त्रब्राह्मणात्मकयोर्वेदनामधेयम्'—आप० य० परि० १.३३ ।
३. 'शेषे ब्राह्मणशब्दः'—जै० सू० २.१.३३ ।
४. 'मन्त्राश्च ब्राह्मणं च वेदः । तत्र मन्त्रलक्षण उक्ते परिशेषसिद्धत्वात् ब्राह्मणलक्षणमवचनीयं मन्त्रलक्षणवचनेनैव सिद्धम्—जै० सू० २.१.३३ पर शबरस्वामी ।
५. हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः ।
परक्रिया पुराकल्पो व्यवधारणकल्पना ॥ १ ॥
उपमानं दशैते तु विधयो ब्राह्मणस्य तु ।
एतत् स्यात् सर्ववेदेषु नियतं विधिलक्षणम् ॥ २ ॥
—जै० सू० २.१.३३ पर शबर द्वारा उद्धृत ।
६. एकपुरुषकर्तृकमुपाख्यानं परिकृतिः बहुकर्तृकं पुराकल्प । यत्रान्यथार्थः प्रतिभातः पौर्वापर्यालोचनेन व्यवधार्यान्यथा कल्प्यते सा व्यवधारणकल्पना; यद्यथा प्रतिगृह्णीयादिति श्रुतं प्रतिग्राहयेदिति कल्पयिष्यते विधिलक्षणमित्यत्र ब्राह्मणवाची विधिशब्दः । इति च तन्त्रवार्तिकम् ।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



के हैं। ४. गोपथ ब्राह्मण अथर्ववेद का है। ये ब्राह्मण ग्रन्थ भारोपीय भाषाओं के सबसे प्राचीन ज्ञात गद्य के निदर्शन माने जाते हैं। इनमें मुख्य रूप से श्रौतयागों एवं ऋत्विजों के कर्म आदि के विषय में प्रतिपादन है। प्रसङ्गतः धार्मिक कृत्यों एवं यज्ञों को समझाने के लिए बहुत-सी कथा-वार्ताएँ भी पाई जाती हैं, तथा इनमें स्थान-स्थान पर शब्दों के निर्वचन भी हैं।

ऋग्वेद के ब्राह्मणों में **ऐतरेय-ब्राह्मण** प्रमुख है। परम्परा के अनुसार इसके द्रष्टा महिदास ऐतरेय हैं। षड्गुरुशिष्य (१२वीं शती) ने ऐतरेय ब्राह्मण की 'सुखप्रदा' वृत्ति में इन्हें किसी यज्ञवल्क नामक ब्राह्मण की 'इतरा' नामक द्वितीय स्त्री का पुत्र बतलाया है।[1] सायण ने भी ऐतरेय ब्राह्मण के भाष्य के उपोद्घात में 'ऐतरेय' नाम के व्युत्पत्ति के सन्दर्भ में एक परम्परागत कथानक प्रस्तुत किया है।[2] इसके अनुसार किसी महर्षि की अनेक पत्नियों में एक का नाम 'इतरा' था, जिसके पुत्र महिदास थे। पिता का स्नेह अन्य पत्नियों के पुत्रों पर था, महिदास पर नहीं। उन्होंने किसी यज्ञ-सभा में महिदास को हटाकर अन्य पुत्रों को अपनी गोद में बैठाया। खिन्नमुख महिदास को देखकर इतरा ने अपनी कुलदेवता भूमि का स्मरण किया। भूमि देवता दिव्य स्वरूप धारण कर यज्ञ-सभा में प्रकट हुईं।[3] उन्होंने महिदास को केवल दिव्य सिंहासन पर ही नहीं बैठाया;[4] किन्तु उन्हें कुमारों की अपेक्षा अधिक पाण्डित्य भी प्रदान किया; और यह वर दिया कि उन्हें 'ब्राह्मण' प्रतिभासित होगा। इस अनुग्रह से महिदास के मन से 'अग्निर्वै देवानामवमः' से प्रारम्भ कर 'स्तृणुते' पर्यन्त चालिस अध्याय का ब्राह्मण प्रादुर्भूत हुआ। उसके बाद 'अथ महाव्रतम्' से लेकर 'आचार्याः' पर्यन्त आरण्यकव्रत रूप ब्राह्मण भी उन्हीं के मन से आविर्भूत हुआ।

---

१. 'आसीद् विप्रो यज्ञवल्को द्विभार्यस्तस्य द्वितीयामितरेति चाहुः।'—इति॰ ऐ॰ ब्रा॰ षड्गुरु॰। किन्तु यज्ञवल्कश्चायं पुराणादावन्वेष्टव्यः।

२. ऐ॰ ब्रा॰ पर सायणभाष्य, पृ॰ ८।

३. स चैतरेयस्त्वितरासुतत्वात् स्त्रीभ्यो ढका महिदासस्तथैषः।
महीप्रणीतासन आसनाच्च स्वाम्बासपत्नी मदनाशनाच्च॥
महादानाद् वेदरूपाच्च नाम त्रिधा निरुक्तं तु पृषोदरादि।
—इति ऐ॰ ब्रा॰ षड्गुरु॰, पृ॰ ८।

४. ऐतरेयारण्यकव्याख्याने षड्गुरुशिष्यः—
इतराख्यस्य माताभूत् स्त्रीभ्यो ढक्यैतरेयगीः।
महिदासो महीदत्तमहासनसमासनात्।
अवोचाम ब्राह्मणादौ माहिदासेतिहासकम्॥
—ऐ॰ आ॰ षड्गुरु॰ भूमिका।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



स्कन्दपुराण के एक अन्य कथानक के अनुसार हारीत ऋषि के वंश में माण्डूकि ऋषि की 'इतरा' नामक स्त्री से उत्पन्न होने के कारण इनका नाम 'ऐतरेय' पड़ा।[१] बचपन से ही ये 'ॐ नमो भगवते वासुदेवाय'—मन्त्र का जाप करने लगे थे। यह किसी से बोलते नहीं थे। इसलिए माण्डूकि ने पिङ्गा नामक दूसरी स्त्री से विवाह किया जिससे उन्हें चार पुत्र हुए। वे बड़े ही विद्वान् थे। अतः उनका उत्तम सम्मान हुआ। इतरा ने अपने पुत्र से कहा कि तेरे गुणवान् न होने के कारण तेरे पिता मेरा अपमान करते हैं। अतः मैं अब देह त्याग कर दूँगी। तब ऐतरेय ने उन्हें धर्म का उपदेश देकर देहत्याग के विचार से परावृत कर दिया। अन्त में भगवान् विष्णु ने उन दोनों को साक्षात् दर्शन देकर आशीर्वाद दिया। बाद में विष्णु भगवान् के आदेशानुसार कोटितीर्थ पर होने वाले हरिमेध्य के यज्ञ में जाकर वेदार्थ पर इन्होंने प्रवचन किया। हरिमेध्य ने इनका पूजन कर अपनी कन्या से इनका विवाह कर दिया।

ऐतरेय आरण्यक में इनका अनेक बार निर्देश है। किन्तु वहाँ कहीं भी इन्हें उस ग्रन्थ का कर्ता नहीं कहा गया है।[२] ऐतरेय उपनिषद् के मध्व भाष्य में भी इन्हें इतरा के तपोबल से उत्पन्न माना गया है।[३] ब्रह्मसूत्र के मध्व भाष्य में इनके सम्बन्ध में ब्रह्माण्ड-पुराण से एक श्लोक भी उद्धृत किया गया है।[४] किन्तु वह श्लोक इस पुराण में उपलब्ध नहीं है। भागवत पुराण के एक टीका के अनुसार इन्हें हरि का अवतार कहा गया है।[५]

इस प्रकार सायण इन्हें परम्परानुसार इतरा का पुत्र और आनन्दतीर्थ विशाल के पुत्र और नारायण का अवतार बताते हैं। छान्दोग्य उपनिषद् में इनके ११६ वर्ष तक

---

१. अस्मिन्नेव मम स्थाने हारीतस्याऽन्वयेऽभवत्।
माण्डूकिरितिविप्राग्र्यो वेदवेदाङ्गपारगः॥
तस्यासीदितरानाम भार्या साध्वी गुणैर्युता।
तस्यामुत्पद्यतसुतस्त्वैतरेय इति स्मृतः॥
—इति स्कन्द० १.२.४२.२८–३०।

२. ऐ० आ० २.१.८; ३.७।

३. प्रादुर्बभूव भगवांस्तपसेतराया, नारायणोऽब्जजसुतस्य विशाल नाम्नः·······दासत्व-मापुरत एव महत्सुराणां, दासत्वतः स महिदास इति प्रसिद्धः।—इति ऐ० उ० मध्वभाष्यम्।

४. महिदासाभिज्ञो जज्ञे इतरायास्तपोबलात्।
साक्षात् स भगवान् विष्णुर्यस्तन्त्रं वैष्णवं व्यधात्॥
—इति ब्रह्माण्डे–द्र० ब्र० सू० मध्वभाष्य।

५. भाग० २.७.१९ पर विजयध्वज।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



जीवित रहने की बात कही गई है ।[१] अतः यह निःसन्दिग्ध है कि ये एक प्रख्यात ऋषि थे । शाङ्खायन गृह्यसूत्र[२] में इनके 'ऐतरेय' और 'महैतरेय' नामों के उल्लेख से इसकी पुष्टि हो जाती है । 'महिदास' शब्द की व्युत्पत्ति चुरादिगणीय पूजार्थक 'मह' धातु, दानार्थक 'दाञ्' धातु और आसनार्थक 'आस' धातु से होती है ।

**ऐतरेय ब्राह्मण और उसका प्रतिपाद्य—**

ऐतरेय ब्राह्मण में चालीस अध्याय हैं । प्रत्येक पाँच अध्याय की 'पञ्चिका' संज्ञा है । इस प्रकार इसमें कुल आठ पञ्चिकाएं हैं । प्रत्येक अध्याय में खण्डों की कल्पना है । इस तरह चालीस अध्यायों में २८५ खण्ड हैं ।

इस ब्राह्मण का प्रधान विषय सोमयाग है । अग्निष्टोम समस्त सोमयाग की प्रकृति है, अतः इसका विधान प्रथम, द्वितीय पञ्चिका और तृतीय पञ्चिका के पञ्चम अध्याय के पाँचवें खण्ड तक है । यह एक दिन का प्रयोग है । उसके बाद अग्निष्टोम की विकृतियों- उक्थ्य, क्रतु, षोळषि-प्रयोग और अतिरात्र क्रतु, जो एक दिन के ही प्रयोग हैं, चतुर्थ पञ्चिका के दूसरे अध्याय के पाँचवें खण्ड तक वर्णित हैं । छठवें खण्ड के तीसरे अध्याय के आठवें खण्ड तक 'गवामयन-सत्र' का विवरण है जो ३६० दिन का प्रयोग है । इसी के बीच में 'आदित्यानामयन-सत्र' और 'अङ्गिरसामयन-सत्र' भी वर्णित हैं । चतुर्थ पञ्चिका तक बीच-बीच में निविद,धाय्या और तूष्णींशंस आदि का और प्रातः, माध्यन्दिन और सायं सवनों में प्रयुज्यमान प्रउगशस्त्र और मरुत्वतीय शस्त्र आदि अनेक शस्त्रों का विधान है । पाँचवीं पञ्चिका में द्वादशाह याग और षष्ठ में 'अग्निहोत्र याग' आदि का वर्णन है । सातवीं और आठवीं पञ्चिका में 'राजसूय क्रतु' [=सोमयागविशेष] वर्णित है । आठवीं पञ्चिका में 'राज्याभिषेक' का और 'ब्रह्मपरिमर' का प्रतिपादन है । इस ब्राह्मण के अन्तिम अध्याय में पुरोहित के धार्मिक और राजनैतिक क्रियाकलाप वर्णित हैं । इस प्रकार प्रस्तुत ब्राह्मण में प्रायः ग्यारह यज्ञों का विधान किया गया है ।

ऐ० ब्रा० में मुख्य रूप से ३३ ही देवता माने गए हैं ।[3] इनमें भी इन्द्र को सभी देवों में श्रेष्ठ माना गया है । इन्हें देवों में सबसे अधिक ओजस्वी, बली, साहसी यथार्थ एवं सबसे दूर तक पार लगाने वाला बताया गया है ।[४]

---

१. छा० उ० ३.१६.७ । तु० जै० उप० ब्रा० ४.२ ।

२. शाङ्खा० गृह्य० ४.१०.३ । द्र० आश्व० गृह्य० ३.४.४ इस पर मौन है ।

३. 'त्र्यस्त्रिंशद् वै देवा'……ऐ० ब्रा० पृ० २८३ ।

४. 'स वै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमः'—ऐ० ब्रा० ७.१६ ।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इनमें चार प्रकार के गुण बतलाए गए हैं - १. देवता सत्य से युक्त होते हैं, २. वे परोक्षप्रिय होते हैं, ३. वे एक दूसरे के घर में नहीं रहते और ४. वे मर्त्यों को अमरत्व प्रदान करते हैं ।[1]

ऐतरेय ब्राह्मण के अन्तिम तीन अध्यायों में कुछ ऐतिहासिक विवरण भी उपलब्ध हैं । इनके अनुसार भारत की पूर्वी सीमा में विदेह आदि अनेक जातियों का राज्य था । दक्षिण में भोज राज्य, पश्चिम में 'नीच्य' और 'अपाच्य' का राज्य, उत्तर में उत्तर कुरुओं और उत्तर मद्र का राज्य तथा मध्य प्रदेश में कुरु एवं पाञ्चालों का राज्य था । इस तरह इस ब्राह्मण में अनेक ऐतिहासिक व्यक्तियों के भी नाम आए हैं; जैसे— परीक्षित-पुत्र-जनमेजय, मनु-पुत्र शर्यात, उग्रसेन-पुत्र युधांश्रौष्ठि, पिजवन-पुत्र सुदास और दुष्यन्त-पुत्र भरत आदि । इसी प्रकार काशी, मत्स्य, कुरुक्षेत्र एवं खाण्डव आदि स्थानों का भी उल्लेख है ।

सम्पूर्ण ब्राह्मण में बीच-बीच में अनेक आख्यान आए हैं, जिनमें शुनःशेप की कथा बड़े विस्तार से उपनिबद्ध है ।[2] संक्षेप में आख्यान इस प्रकार है—

इक्ष्वाकुवंशीय राजा हरिश्चन्द्र के कोई सन्तान न थी । इसलिए उन्होंने वरुण देव की उपासना की तथा उनसे प्रार्थना की कि यदि सन्तान हुई तो उसे वरुण देव को समर्पित करेंगे । वरुण के प्रसाद से राजा को रोहित नामक लड़का हुआ; किन्तु वरुण के माँगने पर राजा लड़के को देने की बात टालते रहे । अन्त में वरुण के प्रकोप से राजा रोग-ग्रस्त हो गए । तब राजा ने अजीगर्त ऋषि के पुत्र शुनःशेप को ख़रीद कर उसकी बलि का उपक्रम रचा । यज्ञ आरम्भ हुआ जिसमें विश्वामित्र, जमदग्नि, अयस्य और वसिष्ठ क्रमशः होता, अध्वर्यु, उद्गाता और ब्रह्मा बने । वरुण की स्तुति कर शुनः-शेप ने बन्धन से मुक्ति पा ली और राजा हरिश्चन्द्र भी रोगमुक्त हो गए । शुनःशेप ने अपने लोभी पिता का परित्याग कर दिया तब विश्वामित्र ने उसे पुत्र रूप में वरण किया ।

**ऐतरेय ब्राह्मण का वैज्ञानिक पक्ष**

प्राचीन काल में वैदिक भारतीय इस निष्कर्ष पर पहुँच गए थे कि सूर्य एक है और वह कभी अस्त नहीं होता । 'यह सूर्य वास्तव में न तो अस्त ही होता है और न उदित ।[3] (i) जब लोग ऐसा सोचते हैं कि वह (सूर्य) अस्त होता है तो वास्तविकता यह होती है कि वह दिन के अन्त में पहुँचता है, उल्टा हो जाता है, नीचे रात्रि बनाता है और ऊपर दिन । (ii) और, जब लोग ऐसा सोचते हैं कि सूर्य प्रातःकाल उदित होता है तो उसका अर्थ है कि वह रात्रि के अन्तिम प्रहर में पहुँच कर उलटा हो जाता है,

---

१. ऐ० ब्रा० १.१.६; ३.३.९; ५.२.४; ६.३.४ । २. ऐ० ब्रा० ३३–३५ ।
३. 'स वा एष न कदाचन''''निम्लोचति' ऐ० ब्रा० ४.६, पृ० ५४५–५४७ ।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



जिससे नीचे दिन बनता है और ऊपर रात्रि। इस तरह वह वस्तुतः कभी भी अस्त नहीं होता। यह उक्ति 'सूर्य प्रज्ञप्ति' में उल्लिखित जैन सिद्धान्त के विपरीत है; क्योंकि जैन सिद्धान्त के अनुसार दो सूर्य एवं दो चन्द्र हैं। ग्रीस (यूनान) में हिरॉक्लिट्स (ई० पू० ६००) ने भी इसी प्रकार की भ्रामक बात कही थी कि प्रति दिन एक नया सूर्य जन्म लेता है और मरता है।[1]

ब्राह्मणकाल में भारतीयों को 'विषुव काल' का भी ज्ञान था। विषुव को यज्ञिय वर्ष के मध्य में रक्खा गया था। उस तिथि को रात और दिन बराबर के होते थे।[2] इसी प्रकार 'दिवाकीर्त्य' कर्म का विधान भी दो पक्षों अर्थात् अर्धवर्षों के मध्य में किया गया है।

इस ब्राह्मण का महत्त्वपूर्ण उपदेश अपने जीवन में दृढ़ निश्चय के साथ अक्लान्त रूप से सदा आगे बढ़ते रहने के लिए ही दिया गया है—

'चरन् वै मधु विन्दति चरन् स्वादुमुदुम्बरम्।
सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चरँश्चरैवेति ॥''

सक्रिय व्यक्ति को मधु की प्राप्ति हो जाती है और सदा गतिशील व्यक्ति स्वादिष्ट उदुम्बर आदि फल प्राप्त कर लेता है। अविश्रान्त रूप से अहर्निश गतिमान् रहने के कारण ही सूर्य विश्व-वन्द्य है; अतः जीवन में दृढ़ निश्चय के साथ आगे चलते चलो, चलते चलो।

### ऐतरेय ब्राह्मण की टीकाएँ और भाष्य

ऐतरेय ब्राह्मण पर भट्टभास्कर का भाष्य है जो अभी प्रकाशित नहीं है। इस पर गोविन्द स्वामी की टीका है जो अद्यावधि हस्तलिखित प्रति के ही रूप में उपलब्ध है। षड्गुरुशिष्य की वृत्ति मात्र ३२ अध्याय तक छपी है। इस ब्राह्मण पर सुविस्तृत एवं प्रख्यात भाष्य केवल सायण का ही है जो दो बार प्रकाशित हो चुका है।

वेद के भाष्यकारों में सायण अत्यन्त प्रतिभाशाली थे। वे विजयनगर के राजा बुक्क (प्रथम), संगम द्वितीय और हरिहर तृतीय के मन्त्री थे। उन्होंने चम्प नरेन्द्र को पराजित किया था। इस प्रकार सायण का समय चौदहवीं शती सिद्ध होता है। ऐसी मान्यता है कि वे ७२ वर्ष की अवस्था में दिवंगत हुए। उन्होंने अनेक उद्भट विद्वानों के सहयोग से चारों वेदों की संहिताओं, उनके ब्राह्मण एवं आरण्यक ग्रन्थों पर भी भाष्य लिखे हैं। उनके प्रधान सहयोगी नरहरि सोमयाजी, नारायण वाजपेययाजी और पंढरी दीक्षित थे।

---

१. द्र० पी० वी० काणे, धर्मशास्त्रों का इतिहास, भाग ४, अनु० अर्जुन चौबे काश्यप, पृ० २५६।

२. 'एकविंशमेतदहरुपयन्ति विषुवन्तं मध्ये संवत्सरस्य' ऐ० ब्रा० ४.१८ (१८.४)।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सर्वप्रथम सायण ने कृष्णयजुर्वेद की तैत्तिरीय संहिता पर भाष्य लिखा। उसके बाद क्रमशः ऋग्वेद ( शाकल संहिता ), शुक्लयजुर्वेद ( काण्व संहिता ), सामवेद ( कौथुम संहिता ) और अथर्ववेद ( शौनकसंहिता ) पर भाष्य लिखा। इसके अतिरिक्त सायण ने सामवेद के आठ प्रसिद्ध ब्राह्मण ग्रन्थों ऋग्वेद के ऐतरेय ब्राह्मण, कृष्णयजुर्वेद के तैत्तिरीय ब्राह्मण और शुक्ल यजुर्वेद की माध्यन्दिन शाखा के शतपथ ब्राह्मण पर भी भाष्य लिखा। इसी तरह उन्होंने तैत्तिरीय आरण्यक और ऐतरेय आरण्यक पर भी भाष्य लिखा। इसके अतिरिक्त अनेक ग्रन्थ भी लिखे। मन्त्रित्व का दुरूहकार्य करते हुए, एक युद्ध में सक्रिय भाग लेकर भी सायण ने इतने भाष्यों का प्रणयन किया और पाँच मौलिक ग्रन्थों की भी रचना की -यह विद्वत् समाज के लिए अत्यन्त आश्चर्य का विषय है।

**ऐतरेय ब्राह्मण के संस्करण**

१. सर्वप्रथम इसे **मार्टिन हाग** ने १८६३ ई० में अंग्रेजी अनुवाद के साथ सम्पादित कर बम्बई से प्रकाशित किया। **२. थ्यूडर आउफ्रेक्ट** ने १८७९ ई० में सायण भाष्य के सारांश के साथ सम्पादित कर बोन से प्रकाशित किया। ३. चार भाग में सम्पूर्ण सायण भाष्य के साथ १८९४–१९०६ ई० में **सत्यव्रत सामश्रमि महोदय ने सम्पादित कर कलकत्ता से प्रकाशित किया। ४. पं० काशीनाथ शास्त्री आगाशे** ने सायण भाष्य के साथ दो भागों में सम्पादित कर १८९६ ई० में आनन्दाश्रम, पूना से प्रकाशित किया। ५. **अनन्तकृष्ण शास्त्री** ने षड्गुरुशिष्य की सुखप्रदा वृत्ति के साथ तीन भागों में (अपूर्ण) १९४२–५२ में त्रिवेन्द्रम् से प्रकाशित किया। ६. **ए० बी० कीथ** द्वारा १९२० में (हार्वर्ड ओ० सी० २५वीं जिल्द) अंग्रेजी में अनूदित हुआ। ७. **इसके अतिरिक्त** निर्णय सागर से १९२५ में मूलमात्र छपा था।

**प्रस्तुत संस्करण**

**अनेक वर्षों से सायण भाष्य के साथ ऐतरेय ब्राह्मण दुष्प्राप्य था। इस ब्राह्मण की** कोई हिन्दी टीका भी प्राप्त नहीं थी। पं० गंगासहाय उपाध्याय कृत 'हिन्दी ऐतरेय ब्राह्मण' मूल के बिना ही साहित्य सम्मेलन, प्रयाग से १९५० में छपा था जो हाग के अंग्रेजी अनुवाद के हिन्दी रूपान्तर होने से मूल से बहुत दूर हो गया था। उससे ऐतरेय ब्राह्मण की आत्मा ही आच्छन्न हो गई थी। अतः सायणभाष्यानुसारी हिन्दी अनुवाद से युक्त प्रस्तुत संस्करण की अत्यन्त आवश्यकता थी जो ऐतरेय ब्राह्मण के विद्यार्थी के लिए उपादेय हो। प्रस्तुत संस्करण में इस अभाव की पूर्ति का प्रयास किया गया है।

वैदिक भाषा की दुरूहता के कारण हिन्दी अनुवाद में अनेक स्थानों पर भावानुवाद करना पड़ा है तथा हिन्दी भाषा के सौष्ठव की दृष्टि से कहीं-कहीं पर एकवचन और बहुवचन को भी हमने परिवर्तित कर दिया है; जैसे अग्नि, इन्द्र, प्रजापति आदि सम्मानित देव हैं, अतः 'इन्द्र करता है' को हमने जानबूझ कर 'इन्द्र करते हैं' या 'प्रजापति पान करता है' को 'प्रजापति पान करते हैं' आदि कर दिया है।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ऐतरेय ब्राह्मण में दो क्रम हैं, १. पञ्चिका-क्रम और २. अध्याय-क्रम । पञ्चिका क्रम के अनुसार आठ पञ्चिकाएँ हैं, और अध्याय-क्रम के अनुसार कुल चालीस अध्याय हैं। इन दोनों ही क्रमों को इस संस्करण में दिया गया है। प्रथमतः पञ्चिका-क्रम के शीर्षक हैं; और उसके बाद अध्याय का क्रम रखा गया है; जो बड़े कोष्ठ में है। अध्याय-क्रम को पुस्तक के सम पृष्ठों पर संख्या के द्वारा दिखाया गया है; जैसे १५.६ अर्थात् पन्द्रहवें अध्याय का छठवाँ खण्ड। इसी प्रकार प्रत्येक अध्याय के अन्त में अध्याय को भी कोष्ठ में रखकर पुष्पिका में स्थान दिया गया है।

सायण भाष्य में अनेक स्थलों पर 'पूर्वोक्तम्' या 'व्याख्यातम्' लिखा है। प्रस्तुत संस्करण में जितने भी ऐसे स्थल हैं वहाँ उनका निर्देश पूर्व स्थल की पृष्ठ संख्या, परवर्ती अध्याय और खण्ड की संख्या देकर निर्देश कराया गया है। अनेक स्थलों पर समानान्तर ब्राह्मणों के स्थल भी टिप्पणी में निर्दिष्ट हैं। कहीं-कहीं पारिभाषिक शब्दों के ज्ञान के लिए कात्यायन, आश्वलायन आदि के श्रौतसूत्रों के अंश और उनकी वृत्ति भी टिप्पणी में दे दी गई है। वैदिक प्रयोगों के ज्ञान के लिए पाणिनि के सूत्र या उनपर वार्तिकों को भी संकेतित कर दिया गया है। लगभग सभी आकर-विशेष का निर्देश कर दिया गया है। इस सबके लिए मैं पं० सत्यव्रत सामश्रमी का आभारी हूँ। षड्गुरु-भाष्य के साथ त्रिवेन्द्रम से छपे ऐतरेय ब्राह्मण के संस्करण से भी मुझे बहुत सहायता मिली है। इन सभी संस्करणों की सरिणी पर चलने से प्रस्तुत संस्करण को सभी प्रकार से समृद्ध करने का मैं प्रयास कर सका हूँ। इसके अतिरिक्त पुस्तक के द्वितीय भाग में अनेक उपादेय परिशिष्ट भी जोड़े गए हैं, जो शोध-छात्रों के लिए अत्यन्त उपयोगी सिद्ध होंगे।

इस संस्करण को प्रकाश में लाने का श्रेय तारा पब्लिकेशन्स के श्रीरमाशंकर जी पण्ड्या को ही है जिन्होंने इस दुरूह कार्य के लिए मुझे प्रोत्साहित किया और इसके प्रकाशन में अत्यन्त तत्परता दिखलाई। अन्त में अपनी श्रद्धेया गुरुवर्य प्रोफेसर डॉ० पद्मा मिश्र के चरणों में मैं नत-मस्तक हूँ, जिन्होंने इस कार्य का निरन्तर अवलोकन किया और समय-समय पर सुझाव देती रहीं। उन्हीं की प्रेरणा से कार्य रूप में परिणत इस कृति को मैं उन्हीं को समर्पित कर रहा हूँ।

विश्वा॑नि देव सवितर्दुरि॒तानि॒ परा॑ सुव।

यद्भ॒द्रं तन्न॒ आ सु॑व ॥ (ऋ० ५.८२.५)

[ हे सविता देव! तुम हम लोगों के समस्त अमङ्गल को दूर करो, और (प्रजा, पशु और गृहादि रूप) कल्याण को हम लोगों के अभिमुख प्रेरित करो। ]

शरद्पूर्णिमा १९८०	विदुषां वशंवदः

३१।२१ लंका, वाराणसी. २१००५	सुधाकर मालवीय

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# संकेत सूची

अथर्व० = अथर्ववेद
आप० धर्म० = आपस्तम्ब धर्मसूत्र
आप० य० परि० सू० = आपस्तम्ब यज्ञ परिभाषा सूत्र
आप० श्रौ० = आपस्तम्ब श्रौतसूत्र
आ० ब्रा० = आर्षेयं ब्राह्मण
आर० गा० = आरण्यगान
आश्व० श्रौ० = आश्वलायन श्रौतसूत्र
आश्व० गृह्य० = आश्वलायन गृह्यसूत्र
उ० आ० = उत्तर आर्चिक
उ० सू० = उणादि सूत्र
ऊ० गा० = ऊह्यगान
ऋ० = ऋग्वेद संहिता
ऋक्सर्वा० = ऋक्सर्वानुक्रमणी (कात्यायन कृत)
ऋक्प्राति० = ऋग्वेद प्रातिशाख्यम्
ऋग्वि० = ऋग्विधान (शौनककृत)
ऐ० आ० = ऐतरेय आरण्यक
ऐ० ब्रा० = ऐतरेय ब्राह्मणम्
क० उ० = कठोपनिषद्
का० श्रौ० सू० = कात्यायन श्रौतसूत्र
कौषी० उ० = कौषीतकि उपनिषद्
गे० गा० = गेयगान
गो० ब्रा० = गोपथ ब्राह्मण
गौ० धर्म० = गौतम धर्मसूत्र
छ० आ० = छन्दोगानम्
छा० उ० = छान्दोग्य उपनिषद्
जै० न्या० वि० = जैमिनीयन्यायमालाविस्तर
ता० ब्रा० = ताण्डय ब्राह्मण
तै० आ० = तैत्तिरीय आरण्यक
तै० उप० = तैत्तिरीय उपनिषद्
तै० प्राति० = तैत्तिरीय प्रातिशाख्यम्
तै० ब्रा० = तैत्तिरीय ब्राह्मणम्
तै० सं० = तैत्तिरीय संहिता
दे० ब्रा० = दैवत ब्राह्मणम्

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ना० शि० = नारद शिक्षा
निघ० = निघण्टु
निवि० = निविद् (यजु० निविदाध्यायगत)
निरु० = निरुक्त
पञ्च० ब्रा० = पञ्चविंश ब्राह्मण (= ताण्डय ब्राह्मण)
पा० महा० = पातञ्जल महाभाष्य
पा० सू० = पाणिनीय सूत्र
पि० = पिङ्गलछन्दःसूत्र
प्र० उ० = प्रश्नोपनिषद्
बृह० उ० = बृहदारण्यक उपनिषद्
बृहद्दे० = बृहद्देवता (शौनककृत)
ब्र० सू० = ब्रह्मसूत्र
बैज० को० = बैजयन्ती कोष
भाग० पु० = भागवत पुराण
मनु० = मनुस्मृति
महाभा० वन० = महाभारत वनपर्व
मार्क० = मार्कण्डेय पुराण
मी० सू० = मीमांसा सूत्र
मै० उ० = मैत्रायणीय उपनिषद्
मै० सं० = मैत्रायणी संहिता
यजु० = यजुर्वेद
याज्ञ० = याज्ञवल्क्यस्मृति
रामा० = रामायण (वाल्मीकीय)
वा० शि० = वाजसनेयि शिक्षा
वा० सं० = वाजसनेयि संहिता
षड्० ब्रा० = षड्विंश ब्राह्मण
शत० ब्रा० = शतपथ ब्राह्मण (माध्यन्दिनीय)
सा० उ० आ० = सामवेद उत्तरार्चिक
सांख्या० ब्रा० = सांख्यायन ब्राह्मण
सा० भा० = सायणभाष्य
साम० = सामवेद
सि० कौ० = सिद्धान्त कौमुदी

———

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

# ऐतरेयब्राह्मणम्

## श्रीमत्सायणाचार्यविरचितभाष्यसहितम्

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

ॐ

# ऐतरेयब्राह्मणम्

## श्रीमत्सायणाचार्यविरचितभाष्यसहितम्

—: ❀ :—

### उपोद्घातप्रकरणम्

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं[1] वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
यत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः ।
आदिशन्माधवाचार्यं[2] वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसङ्ग्रहात् ।
कृपालुर्माधवाचार्यो[3] वेदार्थं वक्तुमुद्यतः ॥ ४ ॥

ननु कोऽयं वेदो नाम ? के वा तस्य विषयप्रयोजनसम्बन्धाधिकारिणः ? कथं वा तस्य प्रामाण्यम् ? न खल्वेतस्मिन् सर्वस्मिन्नसति वेदो व्याख्यानयोग्यो भवति । अत्रोच्यते–इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स **वेदः** । अलौकिकपदेन प्रत्यक्षानुमाने व्यावर्त्येते । अनुभूयमानस्य स्रक्चन्दनवनितादेरिष्टप्राप्तिहेतुत्वम्, औषधादेरनिष्टपरिहारहेतुत्वं च प्रत्यक्षतः सिद्धम्, स्वेनानुभविष्यमाणस्य पुरुषान्तरगतस्य च तथात्वमनुमानगम्यम् । एवं तर्हि भाविजन्मगतमप्यनुमानगम्यमिति चेत्, न; तद्विशेषस्यानवगमात्[4] । न खलु ज्योतिष्टोमादिरिष्टप्राप्तिहेतुः, कलञ्जभक्षणवर्जनादिरनिष्टपरिहारहेतुरित्यमुमर्थं वेदव्यतिरेकेणानुमानसहस्रेणापि तार्किकशिरोमणिरप्यवगन्तुं शक्नोति, तस्माद् अलौकिकोपायबोधको वेद इति लक्षणस्य नातिव्याप्तिः ।

---

१. 'निश्वसिता, निश्वासितम्' इति वा पाठौ ।
२. 'आदिशत्सायणाचार्यं' इति वा पाठः ।
३. 'कृपालुः सायणाचार्यो'—इति मुद्रितेषु ऐतरेयारण्यक–तैत्तिरीयारण्यक-सामवेदीय-छन्द-आरण्यक-भाष्येषु ताण्ड्याद्यष्टब्राह्मणभाष्येषु च पाठः ।
४. 'तद्विशेषस्यानभिगमात्' इति वा पाठः ।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अत एवोक्तम्—

'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥' इति।

स एवोपायो वेदस्य **विषयः**। तद्बोध एव **प्रयोजनम्**। तद्बोधार्थी **चाधिकारी**। तेन सहोपकार्योपकारकभावः **सम्बन्धः**।

नन्वेवं सति स्त्रीशूद्रसहिताः सर्वेऽपि वेदाधिकारिणः स्युः? इष्टं मे स्यादनिष्टं मा भूदित्याशिषः सार्वजनीनत्वात्। मैवम्। स्त्रीशूद्रयोः सत्यप्युपायबोधार्थित्वे हेत्वन्तरेण वेदाधिकारस्य प्रतिबद्धत्वात्; उपनीतस्यैवाध्ययनाधिकारं ब्रुवच्छास्त्रमनुपनीतयोः स्त्रीशूद्रयोर्वेदाध्ययनमनिष्टप्राप्तिहेतुरिति बोधयति। कथं तर्हि तयोस्तदुपायावगमः? पुराणादिभिरिति ब्रूमः।

अत एवोक्तम्—

'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा।
इति भारतमाख्यानं मुनिना कृपया कृतम्॥'[1] इति।

तस्मादुपनीतैरेव त्रैवर्णिकैर्वेदस्य सम्बन्धः। तत्प्रामाण्यं तु बोधकत्वात् स्वत एव सिद्धम्। पौरुषेयवाक्यं तु बोधकमपि सद्भ्रान्तिमूलत्वसम्भावनायां तत्परिहाराय अन्यप्रमाणमपेक्ष्यैव प्रमाणम्। न तु वेदः मूलप्रमाणमपेक्षते; तस्य नित्यत्वेन कर्तृदोषशङ्काया अनुदयात्। एतदेव जैमिनिना सूत्रितम्–'तत्प्रमाणं बादरायणस्यानपेक्षत्वात्'[2]–इति॥

---

१. भाग० पु० १. ४. २५।

२. मी० सू० १.१.५। **'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे, तत्प्रमाणं बादरायणस्यानपेक्षत्वात्' इति सम्पूर्णं सूत्रम्। तत्रेदमित्थं व्याख्यातं शबरस्वामिना स्वभाष्ये—'औत्पत्तिक इति नित्यं ब्रूमः। उत्पत्तिर्हि भाव उच्यते लक्षणया। अवियुक्तः शब्दार्थयोर्भावः सम्बन्धो, नोत्पन्नयोः पश्चात् सम्बन्धः। औत्पत्तिकः शब्दस्यार्थेन सम्बन्धः, तस्य अग्निहोत्रादिलक्षणस्य धर्मस्य निमित्तं प्रत्यक्षादिभिरनवगतस्य। कथम्? उपदेशो हि भवति। उपदेश इति विशिष्टस्य शब्दस्योच्चारणम्। अव्यतिरेकश्च ज्ञानस्य। न हि तदुत्पन्नं ज्ञानं न विपर्येति, न तच्छक्यते वक्तुम्, नैतदेवमिति। यथा भवति—यथा विज्ञायते, न तथा भवति—यथैतन्न विज्ञायते, तथैतदिति। अन्यदस्य हृदये अन्यद् वाचि स्यात्। एवं वदतो विरुद्धमिदं गम्यते अस्ति नास्ति वेति, तस्मात् प्रमाणम् अनपेक्षत्वात्। न ह्येवं सति प्रत्ययान्तरमपेक्षितव्यं पुरुषान्तरं वाऽपि। अयं प्रत्ययो ह्यसौ। बादरायणग्रहणं बादरायणस्येदं मतं कीर्त्यते, बादरायणं पूजयितुम्। नात्मीयं मतं पर्युदासितुम्।'**

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ननु वेदोऽपि कालिदासादिवाक्यवत् पौरुषेय एव ब्रह्मकार्यत्वश्रवणात्—

'…ऋचः सामानि जज्ञिरे।

छन्दांसि जज्ञिरे तस्माद् यजुः तस्मादजायत ॥'[1] इति श्रुतेः।

अत एव भगवान् बादरायणः 'शास्त्रयोनित्वात्'[2] इति सूत्रेण ब्रह्मणो वेदकारणत्वमवोचत्। मैवम्, श्रुतिस्मृतिभ्यां नित्यत्वावगमात्।

'वाचा विरूप नित्यया'[3] इति श्रुतेः।

'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा'[4] इति स्मृतेश्च।

बादरायणोऽपि देवताधिकरणे सूत्रयामास—'अत एव च नित्यत्वम्'[5] इति। तर्हि परस्परविरोध इति चेत्, न नित्यत्वस्य व्यावहारिकत्वात्। सृष्टेरूर्ध्वं संहारात् पूर्वं व्यवहारकालः। तस्मिन्नुत्पत्तिविनाशादर्शनात्। कालाकाशादयो यथा नित्या एवं वेदोऽपि व्यवहारकाले कालिदासादिवाक्यवत् पुरुषविरचितत्वाभावान्नित्यः। आदिसृष्टौ तु कालाकाशादिवदेव ब्रह्मणः सकाशाद् वेदोत्पत्तिराम्नायते। अतो विषयभेदान्न परस्परविरोधः। ब्रह्मणो निर्दोषत्वेन वेदस्य कर्तृदोषाभावात् स्वतस्सिद्धं प्रामाण्यं तदवस्थम्। तस्माल्लक्षणप्रमाणसद्भावाद् विषयप्रयोजनसम्बन्धाधिकारिसत्त्वात्। प्रामाण्यस्य सुस्थित्वाच्च वेदो व्याख्यातव्य एव।[6]

---

१. ऋ० १०. ९०. ९।

२. ब्र० सू० १.१.३। तदिदमेवं व्याख्यातवन्तः श्रीशङ्करभगवत्पादाः—महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत् सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म। न हीदृशस्य शास्त्रस्यर्ग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः सम्भवोऽस्ति।

३. ऋ० ८.७५.६। तस्मै नूनमभिद्यवे वाचा विरूप नित्यया। वृष्णे चोदस्व सुष्टुतिम् ॥ 'हे विरूप=नानारूपैतन्नामक महर्षे त्वम्; तस्मै=प्रसिद्धाय; अभिद्यवे=अभिगततृप्तये वृष्णे = वर्षकायाग्नये नित्यया = उत्पत्तिरहितया, वाचा = मन्त्ररूपया, सुष्टुतिं नूनमिदानीं चोदस्व। स्तुहीत्येवमृषिः स्वात्मानं ब्रवीति यजमानो वा होतारं विरूपम्' —इति तत्रत्यं सायणभाष्यम्।

४. महाभा० १२. २३२. २४। 'आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः'—इति चैतच्छ्लोकस्यापरार्धः ब्रह्मसूत्रस्य शाङ्करभाष्ये दृश्यते न तु महाभारते।

५. ब्र० सू० १. ३. २९। अत एव नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वात् वेदशब्दे नित्यत्वमपि प्रत्येतव्यमिति तत्रत्यं शाङ्करभाष्यम्।

६. ननु कोऽयं वेदः…इत्यारभ्य व्याख्यातव्य एवेत्यन्तो ग्रन्थः तै० सं० सायणभाष्यभूमिकायामपि दृश्यते।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ननु वेदार्थावबोधे विध्यभावाद् बोधसाधनं व्याख्यानं व्यर्थमिति चेत्; न, अध्ययनविधेर्बोधपर्यवसायित्वात् ।[1] एतच्च भट्टगुरुमतानुसारिभिर्बहुधा प्रपञ्चितम् । आम्नायते च—

(i) 'यदधीतमविज्ञातं[2] निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥'

(ii) 'स्थाणुरयं भारहारः किलाभूत् अधीत्य वेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥'[3]

(iii) 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च'[4] इति ।

एवं तर्हि ज्ञानस्य पृथग् विधानादध्ययनं पाठमात्रमिति चेत्, अस्तु नाम, वर्णयन्त्येवमेव शाङ्करदर्शनानुसारिणः ।

क्रतुविधिव्यतिरेकेणानुष्ठानान्यथानुपपत्त्या वेदार्थज्ञानस्य प्रापितत्वान्नैतद् विधेयमिति चेत्, तर्हि तद्विधिबलाद् वेदनमात्रेण स्वतन्त्रं किञ्चिदपूर्वमस्तु । श्रूयते ह्यनुष्ठानज्ञानयोः स्वतन्त्रं पृथक् फलम्—

'सर्वं पाप्मानं तरति, तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद' ।[5] इति ।

अल्पप्रयाससाध्येन वेदनेन तत्सिद्धौ बह्वायाससाध्यमनुष्ठानं व्यर्थं स्यादिति चेत्, न; तरणीयाया ब्रह्महत्याया मानसिक-कायिकत्वादिभेदेन तारतम्योपपत्तेः । मनसा सङ्कल्पिता, वाचाऽभ्यनुज्ञाता परहस्तेन कारिता स्वयं कृता, पुनः पुनः कृता चेत्येवं तारतम्येनावस्थिता ब्रह्महत्याऽनेकविधा । अतस्तरणमप्यनेकविधम्, यथा स्वर्गो बहुविधस्तद्वत् । 'अग्निहोत्रं जुहुयात् स्वर्गकामः' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत',

---

१. अध्ययनविधिश्चैषः—

'यस्तित्याज सखिविदं न तस्य वाच्यपि भागोऽस्ति ।
यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम् ॥ इति ।
( ऋ० सं० १०.७१.६ ) ।

'अग्निं वै जातं' 'सुकृतस्य पन्थामिति' तस्मात् 'स्वाध्यायोऽध्येतव्य' इति च तै० आ० २.१५ ।

२. मुद्रितसंहिताभाष्यभूमिकायां निरुक्ते च ( १.६.१ ) 'यद्गृहीत' एष एव पाठः । पातञ्जलमहाभाष्यस्य पश्पशाह्निके तु 'यदधीत' इति ।

३. निरु० १.६ । 'वचनद्वयं शाखान्तरगतम्' इति ऋ० सं० सा० भा० भूमिकायाम् ।

४. पा० महा० पस्पशाह्निके चोद्धृतमिदं वचनम् ।

५. तै० सं० ५.३.१२.२ ।

CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

